॥ कुण्डलिनीस्तवः रुद्रयामलोत्तरतन्त्रान्तर्गतम् ॥

जन्मोद्धारनिरीक्षणीहतरुणी वेदादिबीजादिमा
नित्यं चेतसि भाव्यते भुवि कदा सद्वाक्यसञ्चारिणी ।
मां पातु प्रियदासभावकपदं संन्घातये श्रीधरा
धात्रि त्वं स्वयमादिदेववनिता दीनातिदीनं पशुम् ॥ ६-२९॥

रक्ताभामृतचन्द्रिका लिपिमयी सर्पाकृतिर्निद्रिता
जाग्रत्कूर्मसमाश्रिता भगवति त्वं मां समालोकय ।
मांसोद्गन्धकुगन्धदोषजडितं वेदादिकार्यान्वितं
स्वल्पान्यामलचन्द्रकोटिकिरणैर्नित्यं शरीरं कुरु ॥ ६-३०॥

सिद्धार्थी निजदोषवित् स्थलगतिर्व्याजीयते विद्यया
कुण्डल्याकुलमार्गमुक्तनगरी मायाकुमार्गः श्रिया ।
यद्येवं भजति प्रभातसमये मध्याह्नकालेऽथवा
नित्यं यः कुलकुण्डलीजपपदाम्भोजं स सिद्धो भवेत् ॥ ६-३१॥

वाय्वाकाशचतुर्दलेऽतिविमले वाञ्छाफलान्यालके
नित्यं सम्प्रति नित्यदेहघटिता शाङ्केतिताभाविता ।
विद्याकुण्डलमालिनी स्वजननी मायाक्रिया भाव्यते
यैस्तैः सिद्धकुलोद्भवैः प्रणतिभिः सत्स्तोत्रकैः शंभुभिः ॥ ६-३२॥

धाताशङ्कर मोहिनीत्रिभुवनच्छायापटोद्गामिनी
संसारादिमहासुखप्रहरणी तत्रस्थिता योगिनी ।
सर्वग्रन्थिविभेदिनी स्वभुजगा सूक्ष्मातिसूक्ष्मापरा
ब्रह्मज्ञानविनोदिनी कुलकुटी व्याघातिनी भाव्यते ॥ ६-३३॥

वन्दे श्रीकुलकुण्डलीत्रिवलिभिः साङ्गैः स्वयम्भूं प्रियम्
प्रावेष्ट्याम्बरमार्गचित्तचपला बालाबलानिष्कला ।
या देवी परिभाति वेदवचना संभाविनी तापिनी
इष्टानां शिरसि स्वयम्भुवनितां संभावयामि क्रियाम् ॥ ६-३४॥

वाणीकोटिमृदङ्गनादमदनानिश्रेणिकोटिध्वनिः
प्राणेशीरसराशिमूलकमलोल्लासैकपूर्णानना ।
आषाढोद्भवमेघवाजनियुतध्वान्तानानास्थायिनी
माता सा परिपातु सूक्ष्मपथगे मां योगिनां शङ्करः ॥ ६-३५॥

त्वामाश्रित्य नरा व्रजन्ति सहसा वैकुण्ठकैलासयोः

आनन्दैकविलासिनीं शशिशतानन्दाननां कारणाम् ।
मातः श्रीकुलकुण्डली प्रियकरे कालीकुलोद्दीपने
तत्स्थानं प्रणमामि भद्रवनिते मामुद्धर त्वं पशुम् ॥ ६-३६॥

कुण्डलीशक्तिमार्गस्थं स्तोत्राष्टकमहाफलम् ।
यतः पठेत् प्रातरुत्थाय स योगी भवति ध्रुवम् ॥ ६-३७॥

क्षणादेव हि पाठेन कविनाथो भवेदिह ।
पठेत् श्रीकुण्डलो योगो ब्रह्मलीनो भवेत् महान् ॥ ६-३८॥

इति ते कथितं नाथ कुण्डलीकोमलं स्तवम् ।
एतत्स्तोत्रप्रसादेन देवेषु गुरुगीष्पतिः ॥ ६-३९॥

सर्वे देवाः सिद्धियुताः अस्याः स्तोत्रप्रसादतः ।
द्विपरार्द्धं चिरंजीवी ब्रह्मा सर्वसुरेश्वरः ॥ ६-४०॥

॥ इति रुद्रयामलोत्तरतन्त्रान्तर्गते कुण्डलिनीस्तवः सम्पूर्णम् ॥